# ॥ श्रीचन्द्राष्टोत्तरशतनामस्तोत्रम् ॥

चन्द्र बीज मन्त्र - ॐ श्राँ श्रीं श्रौं सः चन्द्राय नमः ॥

श्रीमान् शशधरश्चन्द्रो ताराधीशो निशाकरः ।
सुधानिधिः सदाराध्यः सत्पतिः साधुपूजितः ॥ १॥

जितेन्द्रियो जगद्योनिः ज्योतिश्चक्रप्रवर्तकः ।
विकर्तनानुजो वीरो विश्वेशो विदुषाम्पतिः ॥ २॥

दोषाकरो दुष्टदूरः पुष्टिमान् शिष्टपालकः ।
अष्टमूर्तिप्रियोऽनन्त कष्टदारुकुठारकः ॥ ३॥

स्वप्रकाशः प्रकाशात्मा द्युचरो देवभोजनः ।
कळाधरः कालहेतुः कामकृत्कामदायकः ॥ ४॥

मृत्युसंहारकोऽमर्त्यो नित्यानुष्ठानदायकः ।
क्षपाकरः क्षीणपापः क्षयवृद्धिसमन्वितः ॥ ५॥

जैवातृकः शुची शुभ्रो जयी जयफलप्रदः ।
सुधामयस्सुरस्वामी भक्तानामिष्टदायकः ॥ ६॥

भुक्तिदो मुक्तिदो भद्रो भक्तदारिद्र्यभञ्जकः । var भञ्जनः
सामगानप्रियः सर्वरक्षकः सागरोद्भवः ॥ ७॥

भयान्तकृत् भक्तिगम्यो भवबन्धविमोचकः ।
जगत्प्रकाशकिरणो जगदानन्दकारणः ॥ ८॥

निस्सपत्नो निराहारो निर्विकारो निरामयः ।
भूच्छायाऽऽच्छादितो भव्यो भुवनप्रतिपालकः ॥ ९॥

सकलार्तिहरः सौम्यजनकः साधुवन्दितः ।
सर्वागमज्ञः सर्वज्ञो सनकादिमुनिस्तुतः ॥ १०॥

सितच्छत्रध्वजोपेतः सीतांगो सीतभूषणः ।
var षीतांगो षीतभूषणः var पीतांगो पीतभूषणः
श्वेतमाल्याम्बरधरः श्वेतगन्धानुलेपनः ॥ ११॥

दशाश्वरथसंरूढो दण्डपाणिः धनुर्धरः ।
कुन्दपुष्पोज्ज्वलाकारो नयनाब्जसमुद्भवः ॥ १२॥

आत्रेयगोत्रजोऽत्यन्तविनयः प्रियदायकः ।
करुणारससम्पूर्णः कर्कटप्रभुरव्ययः ॥ १३॥

चतुरश्रासनारूढश्चतुरो दिव्यवाहनः ।
विवस्वन्मण्डलाग्नेयवासो वसुसमृद्धिदः ॥ १४॥

महेश्वरःप्रियो दान्त्यो मेरुगोत्रप्रदक्षिणः ।
ग्रहमण्डलमध्यस्थो ग्रसितार्को ग्रहाधिपः ॥ १५॥

द्विजराजो द्युतिलको द्विभुजो द्विजपूजितः ।
औदुम्बरनगावास उदारो रोहिणीपतिः ॥ १६॥

नित्योदयो मुनिस्तुत्यो नित्यानन्दफलप्रदः ।
सकलाह्लादनकरो फलाशसमिधप्रियः ॥ १७॥

एवं नक्षत्रनाथस्य नाम्नामष्टोत्तरं शतम् ।

अथ श्रीचन्द्राष्टोत्तरशतनामस्तोत्रम् ।
अथ वक्ष्ये शशिस्तोत्रं तच्छृणुष्व मुदान्वितः ॥ १॥
चन्द्रोऽमृतमयः श्वेतो विधुर्विमलरूपवान् ।
विशालमण्डलः श्रीमान् पीयूषकिरणः करी ॥ २॥
द्विजराजः शशधरः शशी शिवशिरोगृहः ।
क्षीराब्धितनयो दिव्यो महात्माऽमृतवर्षणः ॥ ३॥
रात्रिनाथो ध्वान्तहर्ता निर्मलो लोकलोचनः ।
चक्षुराह्लादजनकस्तारापतिरखण्डितः ॥ ४॥
षोडशात्मा कलानाथो मदनः कामवल्लभः ।
हंसःस्वामी क्षीणवृद्धो गौरः सततसुन्दरः ॥ ५॥
मनोहरो देवभोग्यो ब्रह्मकर्मविवर्धनः ।
वेदप्रियो वेदकर्मकर्ता हर्ता हरो हरिः ॥ ६॥
ऊर्द्ध्ववासी निशानाथः शृङ्गारभावकर्षणः ।
मुक्तिद्वारं शिवात्मा च तिथिकर्ता कलानिधिः ॥ ७॥
ओषधीपतिरब्जश्च सोमो जैवातृकः शुचिः ।
मृगाङ्को ग्लौः पुण्यनामा चित्रकर्मा सुरार्चितः ॥ ८॥
रोहिणीशो बुधपिता आत्रेयः पुण्यकीर्तकः ।
निरामयो मन्त्ररूपः सत्यो राजा धनप्रदः ॥ ९॥
सौन्दर्यदायको दाता राहुग्रासपराङ्मुखः ।
शरण्यः पार्वतीभालभूषणं भगवानपि ॥ १०॥
पुण्यारण्यप्रियः पूर्णः पूर्णमण्डलमण्डितः ।
हास्यरूपो हास्यकर्ता शुद्धः शुद्धस्वरूपकः॥ ११॥
शरत्कालपरिप्रीतः शारदः कुमुदप्रियः ।
द्युमणिर्दक्षजामाता यक्ष्मारिः पापमोचनः ॥ १२॥

इन्दुः कलङ्कनाशी च सूर्यसङ्गमपण्डितः ।
सूर्योद्भूतः सूर्यगतः सूर्यप्रियपरःपरः ॥ १३॥
स्निग्धरूपः प्रसन्नश्च मुक्ताकर्पूरसुन्दरः ।
जगदाह्लादसन्दर्शो ज्योतिः शास्त्रप्रमाणकः ॥ १४ ॥

सूर्याभावदुःखहर्ता वनस्पतिगतः कृती ।
यज्ञरूपो यज्ञभागी वैद्यो विद्याविशारदः ॥ १५॥
रश्मिकोटिर्दीप्तिकारी गौरभानुरिति द्विज ।
नाम्नामष्टोत्तरशतं चन्द्रस्य पापनाशनम् ॥ १६॥
चन्द्रोदये पठेद्यस्तु स तु सौन्दर्यवान् भवेत् ।
पौर्णमास्यां पठेदेतं स्तवं दिव्यं विशेषतः ॥ १७॥
स्तवस्यास्य प्रसादेन त्रिसन्ध्यापठितस्य च ।

सदाप्रसादास्तिष्ठन्ति ब्राह्मणाश्च द्विजोत्तम ॥ १८॥
श्राद्धे चापि पठेदेतं स्तवं पीयूषरूपिणम् ।
तत्तु श्राद्धमनन्तञ्च कलानाथप्रसादतः ॥ १९॥
दुःस्वप्ननाशनं पुण्यं दाहज्वरविनाशनम् ।
ब्राह्मणाद्याः पठेयुस्तु स्त्रीशूद्राः शृणुयुस्तथा ॥ २०॥

इति बृहद्धर्मपुराणान्तर्गतं श्रीचन्द्राष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ।